सुरेश्वरार्यपूजितां महानदीषु सूत्तमां
द्युलोकतः समागतां गिरीशमस्तकस्थिताम् ।
वधोद्यतादिकल्मषप्रणाशिनीं हितप्रदां
विकाशिकापदे स्थितां विकासदामहं भजे ॥

प्रदेशमुत्तरञ्च पूरुवंशदेशसंस्पृशां
त्रिवेणिसङ्गमिश्रितां सहस्ररश्मिनन्दिनीम् ।
विचेतनप्रपापनाशकारिणीं यमानुजां
नमामि तां सुशान्तिदां कलिन्दशैलजां वराम् ॥

त्रिनेत्रदेवसन्निधौ सुगामिनीं सुधामयीं
महत्प्रकीर्णनाशिनीं सुशोभकर्मवर्द्धिनीम् ।
पराशरात्मजस्तुतां नृसिंहधर्मदेशगां
चतुर्मुखाद्रिसंभवां सुगोदिकामहं भजे ॥

विपञ्चकौलिकां शुभां सुजैमिनीयसेवितां
सु-ऋग्गृचासुवर्णितां सदा शुभप्रदायिनीम् ।
वरां च वैदिकीं नदीं दृशद्वतीसमीपगां
नमामि तां सरस्वतीं पयोनिधिस्वरूपिकाम् ॥

महासुराष्ट्रगुर्जरप्रदेशमध्यकस्पृशां
महानदीं भुविस्थितां सुदीर्घिकां सुमङ्गलाम् ।
पवित्रसज्जलेनलोकपापनाशिनीं शिवां
नमामि तां सुनर्मदां सदा सुधेव सौख्यदाम् ॥

विजम्बुवारिमध्यगां सुमाधुरीं सुशीतलां
सुधासरित्सु देविकेति रूपितां पितृप्रियाम् ।
सुपूज्यदिव्यमानसाञ्च शल्यकर्मनाशिनीं
नमामि सिन्धुमुत्तमां सुसत्फलैर्विमण्डिताम् ॥

अगस्त्यकुम्भसम्भवां कवेरराजकन्यकां
सुरङ्गनाथपादपंकजस्पृशां नृपावनीम् ।

तुलाभिमासके समस्तलोकपुण्यदायिनीं
पुरारिनन्दनप्रियां पुराणवर्णितां भजे ॥

पठेन्नरः सदा न्विमां नुतिं नदीविशेषिका-
मवाप्नुते बलं धनं सुपुत्रसौम्यबान्धवान् ।
महानदीविमज्जनादिपावनप्रपुण्यकं
सदा हि सद्गतिः फलं प्रपाठकस्य तस्य हि ॥